ॐ श्रीगणेशायनमः ॥ ॐ श्रीराधाकृष्णा
भ्यांनमः ॥ ॐ मेरुपृष्ठेसुखासीनं देव
देवंमहेश्वरम् ॥ प्रसन्नवदनंदेवंजटामुकु
टमंडितम् ॥ १ ॥ त्रिनेत्रंदेवदेवेशंनागय
ज्ञोपवीतिनम् ॥ गजचर्मपरीधानंभूतिभू
षितविग्रहम् ॥ २ ॥ कपालमालाभरणं
गंगावीचिरवाकुलम् ॥ इंद्रादिभिर्नतैर्देवैः
सिद्धैरपिचपन्नगैः ॥ ३ ॥ प्रहसंतंजपंतं
चध्यायंतंचमुहुर्मुहुः ॥ बद्धांजलिपुटादे

वीप्रणम्यादौचभक्तितः ॥ ४ ॥ उत्थाय
पार्वतीप्राहस्मितपूर्वंततःस्वयम् ॥ भगवं
स्तेकथंहासः किंदृष्ट्वाश्चर्यपूर्वकम् ॥५॥ए
तन्मेवददेवेशप्रसन्नोयादिमांप्रति ॥६॥ श्री
भैरवउवाच ॥ योसौनारायणोदेवोजगत्पा
तुमिहोदितः ॥ ७॥ कंसादिदानववरान्का
लेतस्यादिजन्मनः ॥ हंतुंकृत्वावतरणंदे
वैरिंद्रादिभिःसह ॥ ८ ॥ नंदगोपगृहेवै
श्यवेशेनानित्यात्मकः ॥ वंशीविभूषि

तकरः क्रीडतेराधयासह ॥ ९ ॥ तस्यक्री
डांसमालोच्यममपोहोप्यजायत ॥ १० ॥
किंकथयामः कस्मै कस्यमनःप्रत्ययो भ
वति ॥ रमयतिगोपवधूटीकुंजकुटीरेपरं
ब्रह्म ॥ ११ ॥ इत्याश्चर्यरसोल्लासविला
सोत्फुल्ललोचनः ॥ देविहर्षवशादस्मिक्री
डांवीक्ष्यजगत्पतेः ॥ १२ ॥ श्रीदेव्युवाच ॥
ईदृशोयदिहासस्तेसमुत्पन्नो महेश्वर ॥ रा
धाकृष्णस्यदेवस्यगोगोपीशस्यईशितुः ॥

॥ १३॥ क्रीडामपूर्वांसंवीक्ष्यममापिदर्शय प्रभो ॥ श्रीभैरव उ० ॥ राधाकृष्णस्यवि द्यातेयाचेद्विंशाक्षरीश्रुता ॥१४ ॥ श्रुतिगो चरमायातितावत्तद्दर्शनंकुतः ॥ श्रीदेव्यु वाच ॥ प्रसन्नोयदिदेवेश मयिदृष्टिंकृपाम यीम् ॥ कुरुष्वातोदर्शयमेविद्यांविंशाक्षरीं श्रुताम् ॥१५॥ राधाकृष्णस्यदेवस्यपंचां गमपिमेवद ॥ यत्पाठाभ्यासतोहेशेहासो ल्लासविलासिनी ॥ १६ ॥ मयाहृष्टीदेव

भूयां त्वत्समानक्रियामिमाम् ॥ १७ ॥
श्रीभैरव उवाच ॥ शक्तिश्रीकामबीजाय
कृष्णाय पदमेवच्च ॥ गोविंदाय ततोराधा
प्रियश्चांतेच वल्लभः ॥ १८ ॥ ङेंतोहिठांतो
मंत्रोयं कीर्तितो नखवर्णकः ॥ अस्य जापा
द्धिदेवेशिऐश्वर्यं प्राप्यदेवताः ॥१९॥ परां
क्रीडांवितन्वंति ह्यप्सरोभिःसमंदिवि ॥
ऋषिर्ब्रह्माच गायत्रीछंदः कृष्णश्च देवता
॥२० ॥कामोबीजं रमाशक्तिर्मायाकीलक

मीरितम् ॥ चतुर्वर्गफलप्राप्त्यै विनियोगः प्रकीर्तितः ॥ २१॥ इंद्राद्या देवताः सर्वाःस्व स्वबीजयुताः क्रमात् ॥ चतुर्द्वारेषु संपूज्य पूर्वादिदशदिक्ष्वपि॥२२॥त्रिवृत्तिं पूजयेद्दे वि नंदभद्रमपिक्रमात्॥गोपालानुत्तमान्दे वि पूजयेच्छक्तिसंयुतान्॥२३॥चतुष्पत्रेषु संपूज्यशंखचक्रगदांबुजम् ॥ अष्टकोणेषु संपूज्य रमाबीजेन संयुताः॥ २४ ॥ रुक्मि णीसत्यभामाचनाग्निजित्यासुनंदया ॥

संयुतामित्रविंदाचतथाचैवसलक्ष्मणा ॥
॥ २५ ॥ जांबवतीसुशीला च रमाबीजोपल
क्षिता ॥ कामदेवःपुष्पबाणः प्रद्युम्नश्चत्रय
स्तथा ॥ कामबीजयुताएते संपूज्यास्तद्ब
हिःक्रमात् ॥ २६॥ बिंदुःपूज्योहाटकतुल्य
दीप्तः सर्वांगेषुसुंदरः सौम्यमूर्तिः ॥ द्योत
द्रत्नैः प्रोतहैमासनस्थोराधाश्लिष्टो माधवो
मत्तमूर्तिः ॥ २७ ॥ इति यंत्रंसमुद्दिष्टं प्र
योगैश्चोपलक्षितम् ॥ राधाकृष्णस्यपंचांगं

प्रत्येकं प्रथमं क्रमात् ॥ २८ ॥ अथवक्ष्ये महाध्यानं राधामाधवयोरिदम् ॥ यद्धृत्वा सर्वसंभूतिंप्राप्नुयात्साधकोनरः ॥ २९ ॥ आरक्तोद्यानकल्पद्रुमतलविलसत्स्वर्णदोलाधिरूढंश्रीराधाप्रेंखमानंकटितटविलसत्क्षुद्रघंटाघटाढ्यम् ॥ वंशीरंध्रांतरं श्रीमुखकमलगलद्वायुनापूर्यमाणं राधाप्रेक्षणहर्षफुल्ल नयनं वंदेसदामाधवम्॥३०॥यंत्रं वक्ष्यामिदेवेशिराधामाधवयोरिदम्॥सर्वा

गमरहस्याढ्यंसर्वहर्षप्रदंतथा ॥३१॥ बिंदुंत्रिकोणंवसुकोणमिश्रंततः स्ववृत्तंवसुपत्रयंत्रम् ॥ श्रीषोडशारंचतुरस्रयुक्तंधराग्रहाढ्यंचरहस्यमेतत् ॥ ३२ ॥ पद्ममष्टपलाशंचचतुरस्रंचलक्षणम् ॥ चतुर्द्वारसमायुक्तंकामगर्भितकर्णिकम् ॥ ३३ ॥ सामान्ययंत्रमुद्दिष्टमेतद्विंशाक्षरीप्रिये ॥ अथवक्ष्येमहादेविप्रयोगान्भोगमोक्षदान् ॥ ३४ यान्विज्ञायसुराःप्रापुरैश्वर्यंपूर्णभोगदम् ॥

अर्धरात्रेवनंगत्वादीपान्प्रज्वाल्यसाधकः
॥ ३५ ॥ वर्णलक्षंमनुंजप्त्वाह्ययुतंजपसं
ख्यया । कामबीजंपुरस्कृत्यस्त्रियोवश्या
भवंतितम् ॥ ३६ ॥ सिंदूरेणलिखेद्यंत्रंमा
याबीजेनपूजयेत् ॥ मंत्रांतरेणसंपूज्यउ
पचारैःक्रमेणतु ॥ ३७ ॥ अणिमाद्याखिलाः
सिद्धीःसंप्राप्यत्वरिततंततः ॥ साधकोधर्म
भावेनपदमुत्तममाप्नुयात् ॥ ३८ ॥ रमाबी
जेनसहितंजप्त्वारण्येवटेतटे ॥ विंशाक्षरेण

संबद्धःश्रीकामः प्राप्नुयाच्छ्रियम् ॥ ३९ ॥
नामबीजंपुरस्कृत्यसाधकोऽश्वत्थमूलके ॥
सर्वान्शत्रून्रणेजित्वाप्राप्नुयात्शंनसंश
यः ॥ ४० ॥ वटेरण्येश्मशानेचशून्यागा
रेच्चतुष्पथे॥अर्धरात्रेथमध्याह्नेपुरश्चरणमा
रभेत् ॥ ४१ ॥ वर्णलक्षंजपेत्पूर्णंपुरश्चरण
मुत्तमम् ॥ कृत्वातुसाधकःपश्चात्सर्वका
र्याणिसाधयेत् ॥ ४२॥ जीवहीनोयथादेहः
सर्वकर्मसुनक्षमः ॥ पुरश्चरणहीनोयोनमं

त्रः फलदायकः ॥ ४३ ॥ भोगदःसुखदोदे
विसम्पद्धोधनरत्नदः ॥ सिद्धिदोमोक्षदोमं
त्रः परमायुष्यदायकः ॥ ४४ ॥ नाभ्यंतरा
योनक्लेशोनशौचानियमोपिवा ॥साक्षात्सि
द्धिप्रदोह्येषोमंत्रोयंभोगमोक्षदः ॥ ४५ ॥इ
तीदंपटलंगुह्यं सर्वतंत्रेषुगोपितम् ॥ राधा
माधवयोर्देविगुह्याद्गुह्यतरंपरम् ॥४६ इति
श्रीविश्वनाथसारोद्धारतंत्रे श्रीराधाकृष्ण
पटलंसमाप्तम् ॥ श्रीराधाकृष्णार्पणमस्तु ॥

ॐ श्रीगुरवेनमः ॥ अथपूजाविधिः ॐअधु
नानित्यपूजायाराधामाधवपद्धतिम् ॥ गद्य
पद्यमयींगोप्यांसकलागमनिश्चिताम् ॥ १
प्रातःकृत्यमकृत्वातुयोदेवंभक्तितोर्चयेत् ।
तस्यपूजातुविफलाशौचहीनायथाक्रिया
॥ २ ॥ तत्रश्रीमान्साधकोब्राह्ममुहूर्तेशयन
तलादुत्थायकरचरणौप्रक्षाल्यनिजासने
समुपविश्य निजशिरसि श्वेतवर्णाधोमुख
सहस्रदलकमलकर्णिकांतर्गतसिंहासनो

परिस्वगुरुं शुक्लालंकारभूषितं ज्ञानानंदमु
दितमानसं सच्चिदानंदविग्रहं ध्यात्वामा
नसोपचारैः संपूज्य श्रीगुरुमंत्रं दशधाप्रज
प्यप्रणमेद्यथा ॥ अखंडमंडलाकारंव्याप्तंये
नचराचरम् ॥ तत्पदंदर्शितंयेन तस्मैश्रीगु
रवेनमः ॥ ३ ॥ इतिगुरुंप्रणम्य मनसातदा
ज्ञांगृहीत्वागुरूपदिष्टमार्गेणस्वेष्टदेवंयथो
क्तरूपंहृदिध्यात्वा मानसोपचारैः संपूज्य
यथाशक्ति जपंविधाय ॥ गुह्यातिगुह्यगो

त्रीत्वंगृहाणास्मत्कृतंजपम् ॥ सिद्धिर्भव
तुमेदेवि त्वत्प्रसादान्महेश्वरि ॥४॥इत्यने
नतेजोरूपंजपफलं देववामहस्तेसमर्प्य ॥
प्रातःप्रभृतिसायांतं सायादिप्रातरंततः।य
त्करोमि जगद्योने तदस्तुतवपूजनम् ॥५॥
अजपाजपंसमर्प्य इतिदेवाज्ञांप्रार्थ्य ॥ ॐ
समुद्रमेखलेदेवि पर्वतस्तनमंडले।विष्णुप
त्निनमस्तुभ्यंपादस्पर्शंक्षमस्वमे॥६॥इति
संप्रार्थ्य श्वासानुसारेण तस्यांपादंनिधाय

पदेपदेमूलंस्मरन् शरक्षेपमात्रंबहिर्गत्वा॥
उत्तिष्ठंतु महाभूतायेभूतास्थानपालकाः॥
मलमूत्रेपरित्यक्ष्येममदोषोनदीयतां ॥७
इति मलमूत्रेपरित्यज्यततोनद्यादौगत्वा
हस्तौपादौप्रक्षाल्य ॐ क्लींकामदेवायसर्व
जनमनोहरायनमः ॥ इतिदंतान्विशो
ध्ययथोक्तगंडूषंकृत्वा स्नानंकुर्याद्यथा
ॐतत्सदद्य अमुकमासस्यअमुकपक्षस्य
तिथावमुकवासरान्वितायाम् ॥ अमुक

शर्माहं श्रीराधाकृष्णप्रीत्यर्थं स्नानमहं क
रिष्येइतिसंकल्प्य समूलऋष्यादिकरष
डंगन्यासान्विधाय स्वपुरतोजले क्रों इत्यं
कुशमुद्रया सूर्यमंडलंभित्त्वा ॐ गंगेच
यमुनेचैवगोदावरिसरस्वति । नर्मदेसिं
धुकावेरिजलेस्मिन्सन्निधिंकुरु ॥ इति
सूर्यमंडलात्तीर्थान्यावाह्य मूलेनचदशधा
भिमंत्र्य धेनुमुद्रयाप्रदर्श्य मनसामूलंस्म
रन् जलेत्रिर्निमज्ज्योन्मज्ज्यमूलंपठन् कुं

भमुद्रया हृदित्रिर्जलेनस्नात्वाधौतेवास
सी परिधाय संध्यामारभेत् ॥ तत्रपूर्व
वत्प्राणायामंकुर्यात् त्रिराचम्य वामह
स्तेन चुलकेनजलमादाय दक्षिणहस्तेना
छाद्य हंयंरंलंवं इतिभौतिकमंत्रेणत्रिराच
म्य मूलमुच्चरन्नुद्गलितोदकबिंदुभिः सप्त
धाशिरः प्रोक्ष्य दक्षिणहस्तेधृत्वा तत्रांकु
शमुद्रयाच्छाद्य तेजोरूपंध्यात्वा इडया
नाड्यादेहांतर्नीत्वा पापंप्रक्षाल्य कृष्णवर्णं

तज्जलं पापरूपं पिंगलया विरेच्य पुरःक
ल्पितवज्राशिलायां वामे फडिति निक्षिपे
त् ॥ इत्यघमर्षणंविधाय ॥ मूलं दशधाज
प्त्वा ॥ ततोगायत्रींजपेत् ॥ ॐह्रींराधायै
विद्महे श्रींमाधवायधीमहि ॥ क्लींराधामाध
वः प्रचोदयात् ॥ ३ ॥ इति दशधाजप्त्वा पु
नः सूर्यायार्घ्यंत्रयंदत्वा श्रीदेवदेव्यौ विधि
ना गायत्रीत्रयंविभाव्य तत्र दिव्यौघमा
नवौघसिद्धौघगतान् गुरून्संतर्प्य अमुक

गुरुंनाम पूर्वकं श्रीगुरुं तर्पयामि नमः। परमगुरुंतर्पयामिनमः।परमेष्ठिगुरुंतर्पयामि नमः। जलेश्रीचक्रं विभाव्य मूलं ॐ ह्रीं श्रीं क्लीं राधामाधवंतर्पयामिनमः इतित्रिः संतर्प्यमूलेन त्रिवारं पित्रादितर्पणं विधाय गायत्रीमूलं यथा शक्त्या जप्त्वाजपं देवदेव्यै समर्प्य संहारमुद्रया देवदेव्यै समर्प्य यागमंडपमागच्छेदितिसंध्याविधिः॥ यागगेहमागत्य पादौ प्रक्षाल्य ॐद्वारदेवता

भ्योनमः ॐद्वारश्रियै नमः इतिद्वारं संपूज्य अपक्रामंतु भूतानि पिशाचाः प्रेतगुह्यकाः ॥ये चात्र निवसंत्यन्ये देवता भुविसांस्थिताः ॥ इति पठन्नात्मांगं संकोच्य भूतेभ्यो निर्गममार्गं ददंतः प्रविश्य जलकलशं पवित्रभूमौ संस्थाप्य आसनशोधनं कुर्यात्॥यथा अस्य श्रीआसनशोधनमंत्रस्य मेरुपृष्ठ ऋषिः।सुतलं छंदः कूर्मो देवता आसनशोधने विनियोगः।इत्यंजलिः।मेरुपृष्ठऋ

षये नमः शिरसि। सुतलं छंदसेनमः मुखे। कूर्मो देवतायै नमः हृदि। आसनशोधने विनियोगाय नमः इति सर्वांगेषु विन्यस्य पृथिवित्वया धृता लोका देवि त्वं विष्णुना धृता॥ त्वंचधारयमां देवि पवित्रं कुरुचासनम्। इति भूमिंप्रार्थ्य ॐ मंडूकायनमः। कालाग्निरुद्रायनमः। मूलप्रकृत्यैनमः। ह्रीं आधारशक्त्यैनमः। ॐ कमलासनायनमः। इत्यासनंसंपूज्य। अपसर्पंतुते भूता ये भूता भु

विसंस्थिताः। येभूताविघ्नकर्तारस्तेनश्यंतु
शिवाज्ञया ॥ पाषंडकारिणोभूता भूताभू
म्यंतरिक्षगाः ॥ दिविलोके स्थितायेच ते
नश्यंतुशिवाज्ञया ॥ भूताः प्रेताः पिशाचा
श्च राक्षसाश्चसरीसृपाः ॥ अपसर्पंतुते
सर्वे दिव्यास्त्रेणैवताडिताः ॥ इति त्रिवि
धान्विघ्नांस्तालत्रयेणपार्ष्णिघातेन दश
भिश्छोटिकाभिश्चप्रोत्सार्य प्राणायामंकु
र्यात् ॥ ततोगुरुंध्यायेत् ॥ ॐगुरुर्ब्रह्मागु

रुर्विष्णुर्गुरुःसाक्षान्महेश्वरः । गुरुरेवजग
त्सर्वं तस्मैश्रीगुरवेनमः ॥ गुरवेनमः ॥
परमगुरवेनमः ॥परमेष्ठिगुरवेनमः । पर
माचार्यगुरवेनमः ॥ ततः आचमनत्रयम्
मूलमुच्चार्यआत्मतत्त्वंशोधयामिस्वाहा ।
मूलं० शिवतत्त्वंशोधयामिस्वाहा।ततोधा
रणापंचकम् ॥ यथाऽक्षयरूपामिमांतनुं
शोधयामिनमइतिस्वशरीरं शुष्कवृक्षप्र
ख्यामिति पार्थिवीधारणा ॥ ॐरक्षरक्षऊं

इमां तनुं दाहयामिनमः इतिदक्षपादां
गुष्ठादुत्थितेन कालाग्निनासर्वंनिर्दग्धंभा
वयेदित्याग्नेयीभावना ॥ वंक्षंमरयरुंद्वा
दशोत्पातितेनशाक्तामृतजलनेसर्वमाप्ला
वयेदितिवारुणीभावना ॥ ततःप्रचंडवा
युनायत्किंचित्तद्दशादिग्गतंभावयेदिति
वायवी॥ नाहमास्मिनचान्योस्मिध्येयंचा
त्रनाविद्यते ॥ आनंदपदसंलीनंमनःस
मरसंगतमित्याकाशीभावना ॥ इत्थं

धरणापंचकेनसर्वं निःशेषमविद्याप्रपंचर
हितंध्यात्वा प्राणप्रतिष्ठांकुर्यात् ॥ ॐ ह्रीं
क्रींयंरंलंवंशंसंषंसंहंहंसः सोहंसः ममप्रा
णाइहप्राणाःपुनः १६ ममजीवइहस्थितः
१६ ममसर्वेंद्रियाणिवाङ्मनश्चक्षुःश्रोत्रजि
ह्वाघ्राणप्राणाइहैवागत्यसुखंचिरंतिष्ठंतु
स्वाहा।इतिप्राणप्रतिष्ठांकृत्वा पूर्ववत्प्राणा
यामत्रयंकृत्वाऽऽचमनंच संकल्पपूर्वंन्या
संकुर्यात् ॥ अस्य श्रीराधाकृष्णपूजामंत्र

स्य ब्रह्माऋषिः गायत्रंछंदः श्रीराधाकृष्णो
देवता क्लींबीजं श्रींशक्तिः ह्रींकीलकं श्रीरा
धावल्लभकृष्णपूजायांविनियोगः ॐब्रह्मा
ऋषयेनमः शिरसि। गायत्रंछंदसेनमः मु
खे। श्रीराधाकृष्णदेवतायैनमोहृदि।क्लींबी
जायनमोगुह्ये।श्रींशक्तयेनमः पादयोः।ह्रीं
कीलकायैनमः सर्वांगेषु इतिविन्यस्यषडं
गानिकुर्यात्। ॐह्रांश्रांअंगुष्ठाभ्यांनमः ।
ॐह्रींश्रीं तर्जनीभ्यांनमः ॐहूंश्रूंमध्यमा

भ्यांनमः ॐ ह्रैं श्रैं अनामिकाभ्यांनमः ॐ ह्रः श्रः करतलकरपृष्ठाभ्यांनमः । ॐ ह्रां श्रां हृदयायनमः ॐ ह्रीं श्रीं शिर० ॐ ह्रूं श्रूं शिखा० ॐ ह्रैं श्रैं कवचाय० ॐ ह्रौं श्रौं नेत्रत्रया० ह्रः श्रः अस्त्रायफट् ॥ अथपीठन्यासः । ॐ कामपीठायअंगुष्ठाभ्यांनमः । ॐ जालंधरपीठायतर्जनीभ्यांनमः । ॐ पूर्णागिरिपीठायमध्यमाभ्यांनमः । ॐ वाराणसीपीठायअनामिकाभ्यांनमः । ॐ मधु

पुरीपीठायकनिष्ठकाभ्यांनमः । ॐ अवं
तिकीपीठायकरतलकरपृष्ठाभ्यांनमः ॥
अथहृदयादिन्यासः ॐ कामरूपपीठायहृ
दयायनमः । ॐ जालंधरपीठायशिरसे
स्वाहा। ॐ पूर्णगिरिपीठायशिखायैवषट् ।
ॐ वाराणसीपीठायकवचायहुम् । मधुपु
रीपीठायनेत्राभ्यांवौषड् । अवंतिकीपीठा
यअस्त्रायफट् । इतिषडंगन्यासः ॥ ततः
करन्यासंमातृकान्यासंचकुर्यात् । अंआं

इंईंउंऊंऋंॠंवामपादादारभ्यगुल्फांतं लृं
ॡंएंऐंओंऔंअंअः दक्षपादादारभ्यगुल्फां
तंयावत्। कंखंगंघंङंवामगुल्फादारभ्यना
भिमूलांतं । चंछंजंझंञंदक्षगुल्फादारभ्य
नाभिमूलांतम्।टंठंडंढंणंनाभ्यादिवामबा
हुमूलांतम्। तंथंदंधंनंनाभ्यादिदक्षबाहुमू
लांतम्। पंफंबंभंमंकट्यादिककुदंतम् ।
यंरंलंवंवामस्कंधादिवामकर्णांतम् । शंषं
संहं दक्षस्कंधादिदक्षकर्णांतम् । ळंक्षःशि

रसः प्रभृतिपादपर्यंतामिति त्रिर्व्यापयेत्॥
अंकंखंगंघंङंआं अंगुष्ठाभ्यांनमः। इंचं
छंजंझंञं ईं तर्ज०। उंटंठंडंढंणंऊंमध्य
मा०। एंतंथंदंधंनंऐं अनामि०। ओंपंफंबं
भंमं औं कनिष्ठि० अंयंरंलंवंशंषंसंहंळंक्षं
अः करतलकरपृष्ठाभ्यांनमः। अथहृदया
दिन्यासः। अं नमः शिरसि। आंनमः मु
खवृत्ते। इंनमः दक्षनेत्रे। ईंनमः वामनेत्रे।
उं नमः दक्षकर्णे। ऊं नमः वामकर्णे। ऋं नमः

दक्षनासिकायां।ॠं नमः वामनासिकायां।
ऌं नमः दक्षगंडे। ॡं नमः वामगंडे।एं नमः
ऊर्ध्वौष्ठे । ऐंनमः अधरोष्ठे।ओंनमः ऊर्ध्वदं
तपंक्तौ । औंनमः अधोदंतपंक्तौ । अं नमः
शिरसि । अः नमःमुखे । कंखंगंघंङंनमः द
क्षबाहुसंधिषु । चंछंजंझंञंनमःवामबाहुसं
धिषु । तंथंदंधंनंनमःवामपादसंधिषु ।
पंनमः दक्षपार्श्वे।फंनमः वामपार्श्वे । बंनमः
पृष्ठे ।भंनमः नाभौ।मंनमः जठरे। यंनमः

ह्ृदि. रंनमः दक्षांसे. लंनमः ककुदि. वंन
मः वामांसे. शंनमः ह्रदादिदक्षहस्ताग्रां
तं. षंनमः ह्रदादिवामहस्ताग्रांतं. सं नमः
ह्रदादिदक्षपादाग्रांतं. हंनमःह्रदादिवा
मपादाग्रांतं. लंनमःपादादिशिरः पर्यंत
म्॥क्षंनमःशिरसःपादपर्यंतम् इतित्रिर्व्या
पयेत्। ततोमूलमंत्रन्यासः। ब्रह्मऋषये
नमः शिरसि।गायत्रछंदसेनमःमुखे।राधा
माधवदेवतायैनमःह्रदि। ह्रींबीजायनमः

गुह्ये । श्रींशक्तयेनमः पादयोः। क्लींकी
लकायनमः नाभौ । जपेविनियोगायन
मः सर्वांगेषु २ ह्रांश्रामित्यादिकरषडं
गन्यासः । न्यासंविधाय मूलमंत्रमुच्चरे
त् । देहशुद्धिं कृत्वा कुंभस्थापनं कुर्या
त् । तत्रसामान्यार्घ्यैईशानेबिंदुषट्को
णवृत्तभूपुरंचक्रंविलिख्य पीठेभ्योनमइ
तिसमभ्यर्च्यतत्रक्षालिताधारपात्रंसंस्था
प्य रंवह्निमंडलायदशकलात्मनेनमः इ

तिअक्षतैः संपूज्य तत्र श्रीघटंसंस्थाप्य ।
रुद्रेणापियथादेविविष्णुनाचयथापुरा । ब्र
ह्मणाचयथापूर्वंतथात्वांस्थामयाम्यहम् ।
इतिसंस्थाप्य अर्कमंडलायद्वादशकला
त्मनेनमः इतिगंधाक्षतपुष्पैरभ्यर्च्य मूलं
विलोममातृकयापरमामृतेनापूर्य सौःसो
ममंडलायषोडशकलात्मनेनमः इतिसंपू
ज्यास्त्रायफट् इतिकरद्वयंसंताड्य मूलंस
मुच्चरेत् । नासयात्रिर्गंधं गृह्णीयात् ।तत्रत्रि

कोणंविलिख्य मूलंत्रिर्जप्त्वासंपूज्य ॐह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः सुधेशुक्रशापमोचय २अमृतं स्त्रावय२ स्वाहा। इति द्रव्योपरिदशधासंज प्य सूर्यमंडलसंभूते वरुणालयसंभवे। उ माबीजमयेदेविशुक्रशापाद्विमुच्यताम् ॥ वेदानांप्रणवोबीजं ब्रह्मानंदमयोयदि।तेन सत्येनहेदेविब्रह्महत्याव्यपोहतु॥ पावमा नः परानंदः पावमानः परोरसः।पावमानंप रंज्ञानंतेनत्वंपावयाम्यहम्।इतित्रिर्जप्त्वा।

ॐ अंआंइंईं अमृतेअमृतोद्भवे अमृतवार्षि
णिअमृतंस्त्रावय आंह्रींअमृतैश्वर्यैनमः इ
तिद्रव्योपरिदशधाजप्त्वा पूजांकुर्यात् ।
फलादीन्समर्प्य गंधाक्षतपुष्पैर्दशवारंमूले
न पूजांकृत्वा । रं राधाकृष्णायनमः रं प्र
द्युम्नायनमः रं क्लींकामदेवायनमः रं
क्लींपुष्पचापायनमः रं प्रद्युम्नायनमः रंभ
द्रायैनमः रं रुक्मिण्यैनमः रं सत्यभा
मायैनमः रंकालिंद्यैनमः रं सत्यायैनमः

रं मित्रविंदायैनमः रं लक्ष्मणायैनमः रंजांबवत्यैनमः रंह्रीं शंखायनमः रंचक्राय नमः रंगदायैनमः रं पद्मायनमः रं नंदाय नमः रंभद्रायनमः रंमणयेनमः रं इंद्रादि भ्योनमः रं अनंतादिभ्योनागेभ्योनमः रं आदित्यादिभ्योग्रहेभ्योनमः रं वज्रा द्यस्त्रेभ्योफट् ॥ ततः पाद्यादिसकलापूजा कार्या श्रीबिंदुभूषितात्रिकोणाष्टकोणचतु ष्पत्रवृत्तत्रयसभूषितभूसदनचतुरस्त्रं श्री

यंत्रं श्रीवर्णादिपात्रे निवेश्य हृदिसदे वीकंदेवं मानसैरुपचारैरभ्यर्च्य बाह्यपूजांकुर्यात् रं ह्रींमंडूकायनमः रं कालाग्निरुद्रायनमः रं मूलप्रकृत्यैनमः रं आधारशक्त्यैनमः रं कूर्मायनमः रंअनंतायनमः रंवराहायनमः रंपृथिव्यैनमः रंसुधार्णवायनमः रंमणिद्वीपायनमः पूर्वादिदिक्षु रंधर्मायनमः पूर्वे रंज्ञानायनमः। दक्षिणे रं वैराग्यायनमः पश्चिमे रं ऐश्व

र्यायनमः उत्तरे रं अधर्मायनमः आ
ग्नेये रं अज्ञानायनमः नैर्ऋते रं अवैरा
ग्यायनमः वायवे रं अनैश्वर्यायनमः
ईशने रं संसत्वायनमः । रंरजसेनमः
तंतमसेनमः। पद्मासनायनमः। योगपीठा
यनमः इतिपीठंसंपूज्य देवंध्यात्वा पुष्पां
जलिंसंगृह्य देवेशभक्तसुलभ परिवारसम
न्वित । यावत्त्वांपूजयिष्यामितावद्देवइ
हावह इतिपुष्पांजलिंक्षिप्त्वा आवाहनादि

मुद्रांप्रदर्श्यश्रीराधाप्रियवल्लभदेवइहाग
च्छ २ संतिष्ठ २ सन्निधत्स्व २ स्वाहा । त
तः प्राणप्रतिष्ठा आंह्रींक्रींयंरंलंवंशंषंसंहंहं
सः सोहंश्रीराधावल्लभस्यप्राणा इहप्रा
णाः॥ पुनरेवं जीव इह स्थितः । २ एवं तृ
तीयपर्याये सर्वेंद्रियाणि वाङ्मनश्चक्षु
रसनाघ्राणप्राणा इहागत्यसुखंचिरंतिष्ठंतु
स्वाहा ३ श्रीराधावल्लभ इदमासनमास्य
ताम् मूलमुच्चार्य पाद्यार्घ्याचमनीयमधुप

कांद्यगंधपुष्पाक्षतधूपदीपनैवेद्यतांबूलछ
त्रचामरारात्रिकादीन्निवेद्यप्रणम्य कल
शामृतेन सांगंसायुधंसपरिच्छदं सशक्ति
कं राधावल्लभंपूजयामिनमः तर्पयामिन
मः इतित्रिःसंतर्प्य देवाज्ञामादायपरिवा
रदेवताः पूजयेत् पुष्पांजलिंदत्वा श्रीरा
धावल्लभश्रीकृष्णपादुकांपूजयामिनमः त
र्पयामिनमः इतिबिंदौप्रथमावरणम् । रं
क्लींकामदेवश्रीपादुकांपूजयामिनमः तर्प

यामिनमः रं पुष्पचापश्रीपा० पू० तर्पया
मिनमः एवं सर्वत्र। रं प्रद्युम्न श्रीपा० पू०
त० इतित्रिकोणेद्वितीयावरणम् । रं श्रीरु
क्मिणीश्रीपादुकांपूजयामिनमः तर्पया
मिनमः रं सत्यभामाश्रीपादुकां पू० त०
रं श्रीभद्राश्रीपादुकां पू० तर्प० रं कालिंदी
पादुकांपूज० तर्प० रं श्रीसत्यापादुकां
पूजया० तर्प० रं मित्रविंदापादुकांपूजया०
तर्प० रं लक्ष्मणापादुकांपूजया० तर्प०

रं जांबवतीश्रीपादुकांपूजया०तर्प० इत्य
ष्टकोणेतृतीयाचरणम् ॥ रं ह्रींशखश्री
पादुकांपूज० तर्प० रं श्रींचक्रश्रीपादुकांपू
ज०तर्प० रं गदाश्रीपादुकांपूजया० तर्प०
रं पद्मश्रीपादुकां पूजया० तर्प० इति
चतुष्पत्रेषुचतुर्थावरणं ॥ रंह्रींश्रींयशोदा
सहित नंदन श्रीपादुकांपूजयामिनमः त
र्प० रं भद्राश्रीपादुकांपूजया० तर्प० रं
मणिश्रीपादुकांपूजया० तर्प० इति वृत्तत्र

येपंचमावरणम् ॥ रं मूलंलं इंद्रश्रीपादु
कांपूजयामिनमः त० रं रंवान्हिश्रीपादुकां
पूजयामिनमः तर्पया० रंयमश्रीपादुकांपू
जयामि० तर्प० रंनिर्ऋतिश्रीपादुकांपूज०
तर्प० रं वरुणश्रीपादुकांपूज० तर्प० रं व
रुणश्रीपादुकांपूजया० तर्प० रंयंवायुश्री
पादुकांपूजया० तर्प० रं कुबेरश्रीपादुकां
पूजजा० तर्प० रं ईशानश्रीपादुकांपूज०
तर्प० रं वज्रश्रीपादुकांपूजया० तर्प० श

क्तिश्रीपादुकांपूजया० तर्प० ॡं दंडश्रीपादुकांपूजया० तर्प० ॡं खड्गश्रीपादुकांपूजया० तर्प० ॡं पाशश्रीपादुकांपूजया० त० ॡं ध्वजश्रीपादुकांपूजया० त० ॡं गदाश्रीपादुकांपूजया० त० ॡं त्रिशूलश्रीपादुकांपूज० त० इति बाह्यद्वारेषष्ठावरणम् ॥ मूलंत्रिरुच्चार्य सांगंसवाहनं सायुधं सपरिछदंराधाकृष्णदेवंपूजयामिनमः । तर्पयामिनमः ॥ इतिसप्तमावरणम् ॥ इत्येवं

संपूज्य संतर्प्ययोनिमुद्रयाप्रणमेत् । पुन
नैवेद्याचमनीयतांबूलादीन्निवेद्य देवताग्रे
मालांमूलेनसंपूज्य यथाशक्तिजप्त्वा जपां
तेमालांशिरसि पूर्ववत्प्राणायामः ऋष्या
दिकरषडंगन्यासान्विधाय तर्पणं।गुह्या
तिगुह्यगोप्त्रीत्वंगृहाणास्मत्कृतंजपम् ।
सिद्धिर्भवतुमेदेवत्वत्प्रसादान्ममप्रभो ।
इत्यादिदेवायजपंसमर्प्य तदग्रेकवचसह
स्रनाम स्तवराजपाठंतदपिदेवायसमर्प्य

पुष्पांजलिंदत्वा नासयापुष्पमाघ्रायना
सिकारंध्रेसदेवीकंदेवंप्रापयित्वा पुनर्हृत्क
मलमानीय स्वयमपिवैष्णवाचारपरः सु
खंविहरेत् ॥ इतिश्रीदेवदेवस्यश्रीराधाव
ल्लभस्यते। कृष्णस्यपद्धतिर्नित्यपूजायाव
र्णितामया ॥ गुह्यमिदंपरंतत्वंपूजासारंम
हेश्वरि ॥ गोपयेद्वैष्णवःसत्यमित्याज्ञापा
रमेश्वरी॥ इतिश्रीविश्वनाथसारोद्धारेतंत्रे
श्रीराधाकृष्णनित्यपूजापद्धतिःसमाप्ता ॥

ॐअथकवचम् ॥ श्रीभैरवउवाच॥ अधुना
कथयिष्यामिराधकृष्णस्यभैरवि । कवचं
मंत्रगर्भंतुवज्रपंजरसंज्ञकम् ॥ १ ॥ रहस्यं
सर्वदेवानांमर्त्यानांचविशेषतः ॥ अस्यै
वधारणाद्वाहंसर्वज्ञोस्मिमहेश्वरि ॥ २ ॥
यद्धारणात्ससर्जादौब्रह्मासृष्टिंपृथग्विधा
म् ॥ यंधृत्वात्रिदशेंद्रत्वंप्रालेभेपाकशास
नः ॥ ३ ॥ व्योम्निप्रकाशतेभानुर्नित्यं
यद्धारणात्प्रिये ॥ सर्वप्राणिनियंतापिबभू

वधर्मराज्यतः ॥४॥ धनाध्यक्षः कुबेरोभू
दस्यसंधारणादपि ॥ यस्मिन्धृतेपाशह
स्तः सलिलेशोबभूवह ॥५॥ येयेपूर्वदानवें
द्राःप्रबलाःकर्मणापिच ॥ अस्यैवधारणा
त्सर्वैतेतेनीतामृतिंमया ॥६॥ शक्नुयात्को
गणयितुं माहात्म्यमस्यचेश्वरि । विना
नेननसिद्धिःस्यादिहलोकेपरत्रच ॥ ७ ॥
कवचंयंसमाबध्यमंत्रजापंसमाचरेत् ॥ते
नैवमंत्रासिद्धिश्चजायतेपरमाद्भुता ॥ ८ ॥

कवचस्यास्यदेवेशि ब्रह्माप्रोक्तोमुनिस्त
था ॥ गायत्रंछंदइत्युक्तं श्रीराधाप्रियवल्ल
भः ॥ ९ ॥ देवतात्रपरंबीजं मायायाःपर
मेश्वरि ॥ रमाशक्तिः कामराजबीजंकील
कमीश्वरि ॥ १० ॥ चतुर्वर्गफलावाप्तौवि
नियोगःप्रकीर्तितः ॥ ११ ॥ अथध्यान
म् ॥ ध्यानंवक्ष्येमहादेवि श्रीराधामाधव
स्यच ॥ यज्ज्ञात्वामंत्रवित्प्राज्ञःसिद्धिं
प्राप्नोतिचैश्वरीम् ॥ १२ ॥ श्रीमद्वृन्दानक

ल्पद्रुमाविटपलसत्स्वर्णदोलाधिरूढं श्रीरा
धारिंखमाणं कटितटविलसत्क्षुद्रघंटारवा
ढ्यम् ॥ वंशीरंध्रांतरंश्रीमुखकमलगल
द्वायुनापूर्यमाणं राधाप्रेक्षणहर्षफुल्लनयनं
वंदेसदामाधवम् ॥१३॥ श्यामंपूर्णेंदुवदनं
वराभयलसत्करम् ॥ राधाश्लिष्टतनुंकांतं
मुक्तिदंमाधवंभजे ॥ १४ ॥ ॐह्रींमस्तकं
माधवोव्याच्छ्रींश्रीकृष्णोललाटकम् ॥ पा
यान्नेत्रेसदापातुक्लींगोविंदःसमंततः॥१५॥

श्रीराधावल्लभःपातुनासांमेभक्तवत्सलः॥
दामोदरोमुखंपातुवैकुंठःपातुकंठकम् ॥
॥ १६ ॥ वक्षःस्थलंसदापायान्ममश्रीवत्स
लांछनः ॥ चतुर्भुजोभुजौपातुहस्तौरक्षतु
केशवः ॥ १७॥ पार्श्वौममसदापातुपूर्णचं
द्रनिभाननः ॥ हृदयंमुकुंदःपायान्मेकुक्षिं
विश्वंभरोमम ॥ १८ ॥ पृष्ठंपार्थसखःपा
तुनाभिंपंचजनाभियुक् ॥ गुह्यंमेरक्षतुश्री
मान्सर्वतोविष्टरश्रवाः॥ १९॥ शिश्नंश्रीशः

सदापायात्कटिंकैटभजित्तथा ॥ ऊरूत्रि
विक्रमः पातुजानुनीचजनार्दनः ॥२० ॥
जंघेगदाधरःपातुगुल्फौमेगरुडध्वजः ॥पा
दौसहस्रपात्पातुराधेशःसकलंवपुः ॥२१॥
इंद्रोमांपूर्वतः पातुवह्निर्वह्नौसदामम ॥ य
मोदक्षिणतः पातुनैर्ऋते निर्ऋतिस्तथा ॥
॥ २२ ॥ वरुणःपश्चिमेपायाद्वायव्येव्या
त्सदागतिः॥ कुबेरउत्तरेपायादैशान्यामी
श्वरोवतु ॥ २३ ॥ दशदिक्षुसदापातुश्रीरा

धावल्लभःप्रभुः ॥ प्रभातेपातु श्रीकृष्णोम
ध्याह्नेगोपवल्लभः ॥२४॥ सायंराधाप्रियः
पातुप्रदोषेगोपातिप्रियः ॥ अर्धरात्रेसदापा
तुप्रद्युम्नोभगवान्मम ॥ २५ ॥ निशांतेमा
धवःपातु विष्वक्सेनस्तुसर्वदा ॥ रणेराज
भयेद्यूतेविवादेशत्रुसंकटे ॥ २६ ॥ ॐ ह्रीं
श्रींक्लींसदापातु श्रीराधावल्लभःप्रभुः॥२७
ॐ ह्रींश्रींगरुडध्वजः सगतिमान्पायाद्रणे
संकटे श्रीकृष्णोभगवान्ममारिनिवहान्वि

ध्वंसयेत्तत्क्षणात् ॥ गोविंदोवतुमांसदा हरिभयाद्राधाप्रियोमाधवो मांपायाद्विपदःश्मशानगचरक्रयाद्याद्भयात्सर्वतः॥२८ (तोयौघाज्ज्वलनोद्भवादरिभयान्मांपातुराधेश्वरः)।इतीदंकवचंदिव्यंवज्रपंजरकाभिधम् ॥सर्वसौभाग्यजननंसुखदंसंततिप्रदम् ॥२९॥लक्ष्मीसंवर्धनंदेविपरमार्थरसायनम् ॥ मंत्रगर्भंपरंसारंरहस्यंत्रिदिवौकसाम्॥३०॥त्रिसंध्यंयःपठेन्नित्यंकवचंप्रयतः

पुमान्॥३१॥सयातिपरमंधाम वैष्णवंसा
धकोत्तमः॥ दशवारं पठेद्यस्तुरतादौवैष्ण
वोत्तमः॥३२॥ विष्णुभक्तिरतंपुत्रंप्राप्नोति
कुलदीपकम् ॥रविवारेलिखेद्यस्तुतिष्यर्क्षे
साधकोत्तमः॥ ३३ ॥ गंधाष्टकेनविमले
भूर्जैरंध्रविहीनके॥ लिखित्वारक्तवस्त्रेणसं
वेष्ट्यसमनुंजपन् ॥३४॥ सुवर्णगुटिका
मध्ये स्थापयित्वाविधानतः॥ मूर्ध्नितांधा
रयेद्धीमानश्रीराधावल्लभंस्मरन्॥ ३५ ॥

रणेरिपूञ्जयत्याशुवादेस्तुत्योभविष्यति॥ नारींरूपवतींसाध्वींलभतेनात्रसंशयः ३६ वंध्यावाकाकवंध्यावामृतवत्सापियांग ना॥ सावध्नीयात्कंठदेशेलभेत्पुत्रांश्चिरायु षः ॥ ३७ ॥ गुरूपदेशतोधृत्वागुरुंध्या त्वामनुंजपन् ॥ वर्णलक्षपुरश्चर्याफलं प्राप्नोतिसाधकः ॥ ३८ ॥ बहुनात्रकिमु क्तेनकवचस्यास्यपार्वति ॥विनानानेनसि द्धिःस्यान्मंत्रस्यास्यमहेश्वरि॥ ३९॥ गो

प्याद्गोप्यंमहादेवि श्रीराधाकृष्णसंभवम्।
वज्रपंजरकंवर्मगोपनीयंमहेश्वरि ॥ ४० ॥
दीक्षितायकुलीनायशिष्यायगुणशालिने।
दातव्यंश्रद्धधानायकृष्णभक्तिरतायच ॥
॥ ४१ ॥ अभक्तायनदातव्यंकुचैलायदुरा
त्मने ॥ क्रूरायपरशिष्यायशठायपरमेश्व
रि॥४२॥रहस्यंसर्वसाराढ्यं गोपनीयंस्व
योनिवत् ॥४३॥ इतिश्रीविश्वनाथसारोद्धा
रेमहातंत्रेश्रीराधाकृष्णकवचं समाप्तम् ॥

ॐ श्रीभैरव्यैनमः ॥ भगवन्करुणांभोधे
भक्ताभीष्टफलप्रद ॥ रहस्यंप्रष्टुमिच्छामि
यत्त्वंपठासिसर्वदा ॥ १ ॥ यदिप्रियास्मिते
तत्त्वंवदकारुण्यतोमम ॥ भैरवउ० ॥ एतद्र
हस्यंपरमंसर्वस्वंममसुंदरि ॥ २ ॥ अद्याव
धिनकस्यापिकथितमिदमुत्तमम् ॥ अधु
नाकथयिष्यामिप्रीत्यातवमहेश्वरि ॥ ३ ॥
सर्वमंत्रमयंतत्त्वंसर्वागमरहस्यकम् ॥ ल
क्ष्मीसंवर्धनंदेविशमनंपापकर्मणाम् ॥ ४ ॥

पूजाफलप्रदंलोके सुखदंसंततिप्रदम् ॥ प
तिपत्न्योर्योगकरंविरहज्वरनाशनम् ॥५॥
श्रीराधामाधवाभिख्यंदेविनामसहस्रकं ॥
गोप्यंगुह्यतमंदेविसर्वापद्विनिवारणम् ६॥
यत्पाठादेवदेवेशःशक्रानुग्रहकारकः ॥ अ
द्वितीयोस्मिदेवेशिसर्वसंहृतिकारकः ॥७
तत्पाठमहमेकांतेकरोमिसर्वदाप्रिये ॥ य
त्पाठकरणाद्देविमंत्रासिद्धिर्भविष्यति ॥८
यःकश्चिन्मानवोलोकेश्रीराधामाधवस्य

च ॥पठिष्यतिशुचिर्भूत्वाशुभनामसहस्र
कम् ॥ ९ ॥ तस्यनश्यंतिपापानिपुण्यवृ
द्धिःप्रजायते ॥ यत्फलंसर्वयज्ञेषुसर्वतीर्थे
षुयत्फलम् ॥ १० ॥ तत्फलंसमवाप्नोतिय
त्पाठकरणात्प्रिये ॥ इदंरहस्यंपरमंकृष्ण
नामसहस्रकम् ॥११॥अवाच्यंभक्तिहीना
नामभक्तानांकुचैलिनाम् ॥वक्तव्यंश्रद्दना
नानामास्तिकानां महेश्वरि॥१२॥गुरूपदे
शतोदेविभक्त्यानित्यंप्रपूजयेत ॥ श्रीरा

धावल्लभंप्रीत्याविधिनासाधकोत्तमः ॥१३

पूजयित्वातदग्रेतुकृष्णनामसहस्रम् ।ध्या

त्वामनासिश्रीराधाकृष्णपादारविंदकम् ॥

॥ १४॥ कुर्वीतपाठंमातिमान्सर्वसिद्धिमवा

प्नुयात् ॥ १५॥ अस्यश्रीराधाकृष्णनाम

सहस्रस्य शिवऋषिःअनुष्टुप्छंदः श्रीराधा

प्रियः श्रीकृष्णोदेवता ह्रींबीजं श्रींशक्तिः

क्लींकीलकम् धर्मार्थकाममोक्षार्थेपाठेवि

नियोगः ॥ अथध्यानम् ॥ श्यामंपूर्णेंदुवदनं

वराभयलसत्करम् ॥ राधाश्लिष्टतनुंकांतं मुक्तिदंमाधवंभजे ॥ १६ ॥ इतिध्यानम् ॥ राधेशोराधिकानाथोराधाकृष्णोरमापतिः ॥ रासक्रीडारतोरामोविरामोभूतनायकः ॥ १७ ॥ भूतेशोवल्लभःप्राणोलक्ष्मीनाथोमहीपतिः ॥ सम्राट्समोनरःकृष्णो विश्वात्माजगतांगुरुः ॥ १८ ॥ माधवोभक्तिलभ्योराट्शांतःशांतिप्रदः सुखी ॥ गोपीनाथोमहेशानो गोपीशोगोपवल्लभः ॥ १९ ॥ गोपी

वृंदगतोभानुर्महासीनोमहामतिः ॥ वागी
शःसर्वतत्त्वज्ञःसर्वज्ञोगोपनायकः ॥ २०॥
नारायणोमहीभर्तामहानेतामहाद्युतिः ॥
सकलःसर्वसारज्ञः सर्वेशःशुभदायकः२१
ज्ञानगम्योमुरारातिर्मुकुंदोमितविक्रमः ॥
यज्ञोयज्वपतिर्वाग्मी वार्धिशायीरमास
खः ॥ २२ ॥ शेषोऽशेषप्रदःप्राज्ञोविष्णुर्भूते
श्वरोमहान् ॥ वैकुंठोऽकुत्सितःश्रीमान्स
त्वमूर्तिरनेकपात् ॥ २३॥ सहस्रशीर्षोभग

वानुपेंद्रोमधुसूदनः॥ भक्तिगम्योभक्तिना
थोभक्ताभीष्टफलप्रदः॥२४॥ भाग्यवान्भ
गहानंदीभव्योभूतमहेश्वरः॥कृष्णवर्णोम
हाकायः कृष्णांगश्चतुरःक्षमी॥ २५॥ महा
मान्योमहामार्गोमानीमानार्थदर्शकः॥स
मग्रःपार्थिवोव्यापीकपिलःकोकिलद्युतिः
॥ २६॥कपीशाचार्यःकलाभिज्ञःकलासारः
कलातनुः।कांतःकमलपत्राक्षःकामेशःका
मरूपभृत॥२७॥ कविःकालःकलेशानः

कार्यानुग्रहकारकः॥कलिद्वेषकरः काम्यः कामनाफलदायकः ॥२८॥ कचघातकरः काव्यः कचीकवचधारणः॥ कंजनाभिःकंजनेत्रःकटिसूत्रधरःशुभः ॥ २९॥ कंदोऽकठोरःकाव्यार्थप्राज्ञोगायःप्रियःप्रभुः॥ कफघ्नःकंबुग्रीवोच्चः कमूर्तिः कंपरद्युतिः॥३०॥ खलारतोऽखलःसाधुःखरूपीखगगः खराट्॥गणेशोगहनोगोपो गभीरोगोमतीप्रियः ॥ ३१ ॥ गोदेवोगोकुलानंदीगोदोगरुडवा

हनः ॥ चाटुकाराप्रियश्चापी चार्वंगश्चाऽमरा
र्चितः ॥३२॥ चारुमूर्तिश्चारुभवश्चराचरसु
सेवितः ॥ चामीकररुचिश्चंद्रादित्यनेत्रः
स्वयंप्रभः ॥ ३३ ॥ छत्रशालीछात्रपूज्य
श्छत्रचामरपूजितः ॥ जयशालीजपासक्तो
जपाकुसमधारकः ॥ ३४॥ जटिलोजनको
जीवदायीजयनशीलकः ॥ जांबूनदांशुको
जंबूफलभोगीजयप्रदः ॥ ३५ ॥ जंघालो
जंगमेशानोजराहीनोजरद्रवः ॥ जलशा

यीजगन्नेताजगद्भानुर्जगत्प्रभुः ॥३६॥ झष
रूपीसदारम्योमहेष्वासोमहागतिः ॥यमु
नेशोयाम्यगतिर्यमनोयमघातकः॥३७॥
दमनोदांतशीलश्चधीशोधीमतिवल्लभः ॥
वत्सपालोमहादीप्तोमहांगोमकराकृतिः॥
॥ ३८ ॥ सुलक्षणोलक्षणश्चालोभीचलक्ष्म
णाग्रजः ॥ललन्मालोलोलनेत्रःसुकेशःश्री
मतां वरः ॥ ३९ ॥ तिलपुष्पौजसः शांतो
दैत्यहाविष्टरश्रवाः॥ महाकायोमहामर्षी

पीतवासा जनार्दनः ॥ ४० ॥ समीरस्थश्च
क्रपाणिर्विष्वक्सेनोच्युतोहरिः ॥ कांतिप्र
दोज्ञानगम्योव्यापकोऽजोनिरंजनः॥४१॥
चतुर्भुजःपद्महस्तः शंखपाणिर्जयीखगः ॥
संवत्सरकरोमानीकालज्ञःकालभेदनः ॥
॥ ४२ ॥ महामात्रोमहादेवोदैवज्ञोद्विज
वल्लभः ॥ महाक्रमोमहाभीमोमहाभोगी
महामनाः ॥ ४३ ॥ सर्वपापहरोमृत्युह
रःकालांतकारकः ॥ करणःकारणःकर्त्ता

क्रियेशः कर्मकारकः ॥४४॥ कौलिकागमतत्वज्ञः कौलिकाभीष्टदः स्वराट् ॥ कालेयदमनो भीमः सर्वप्राणापहारकः ॥ ४५ ॥ वृषस्कंदो महाभीरुर्नक्रजिच्छमनः शुचिः ॥ खर्वः खसूचिः खेटस्तु खरूपी हृत्खमध्यगः ॥ ॥४६॥ कशायी कंजनयनो विश्वरूपो विभावसुः ॥ अजन्मा फलदाता च पद्मेशः पद्मलोचनः ॥४७॥ मधुदानवजिद्व्यापी मुकुंदो मितविक्रमः ॥ स्फीतो विश्वकलाक्रांतो महा

मेरुर्महागतिः॥४८॥आसीनोविश्वभृद्धर्ता
देवेनःकमलापतिः ॥ सौभाग्योभूतनाथ
श्चमहांगःकपिलःस्वभूः॥ ४९ ॥ उर्वीधरो
गोपमूर्तिर्गोकुलेशःसुरार्चितः ॥ रौहिणोम
ध्यधामाचमध्यनाडीप्रबोधकः॥५०॥कुले
शोवासुदेवश्चमहामायीमनोरथः॥ चक्रध्र
श्चक्रपूज्यश्चचक्रपाणिःक्रमातिगः॥ ५१ ॥
क्रमणः क्रांतिदलनः क्रांतिकालज्ञएणभृ
त् ॥ कैटभारिर्वकोन्मर्दीमहेंद्रदमनस्त

था ॥५२॥ हास्यज्ञोहास्यकृद्धास्योनित्यं
नृत्यप्रियोवसुः ॥ उपवीतधरोयज्ञोयज्ञसा
ध्योमहामुनिः ॥५३॥ गदाधरोमहावीरो
महोत्साहोमनोगतिः ॥ मनोरथप्रदःशांतः
खेशःस्वस्थःपिशाचहृत् ॥५४॥ विघ्नौघ
दलनोवायुवेगोगर्वातिगोमणिः ॥ मणिभ
द्रोदिव्यमणिधरोवामनरूपधृक् ॥५५॥
इभ्यःकलावान्प्रवरोमहाकांतोमहेश्वरः ॥
समीरःशाश्वतोभीमःसर्वज्ञःसकलार्थवित्

॥ ५६ ॥ विश्वसूर्वैश्वदेवश्चरमाढ्योरमणः
क्षमी ॥ सर्वैभ्यःपुष्कराक्षश्चदनुजांतकरः
परः ॥ ५७ ॥ वषट्कारःस्वधाकारःस्वधा
रूपीमहामनाः ॥ वामनोबलिजिद्बालोबा
लेनत्रःप्रसादकृत् ॥ ५८ ॥ भोजनोजन
नोऽदीनोदीनार्तिहृत्कपिः ॥ कपीशानुगतो
वाग्मीदशकंधरघातकः ॥ ५९ ॥ सुलक्षणः
समालेशोवनमालीसुवाससः ॥ पादहाका
मरूपीत्वजयमंत्रपरायणः ॥ ६० ॥ आतपी

बहुमानीशोविश्वभृद्विश्वजिद्विधुः ॥ विश्व
रूपीमहीपालोरतीशश्चसतांगतिः ॥ ६१ ॥
पवनःपरमेशानः पावनः पावकः पुमान् ॥
पविभृद्दनुजोऽपाप्मा पाकशासनवैरिहा॥
॥ ६२ ॥ परात्मापररूपीचपरापरवपुर्ध
रः ॥ पराप्रकृतिनाथश्चप्रजेशः पुण्यकार
कः ॥६३ ॥ प्रतारकोऽप्रमेयात्माप्रवासी
प्रबलोऽपरः ॥ प्रलीलःप्रकृतिःकालः प्रलो
भी प्रमथाधिपः ॥ ६४ ॥ प्रमार्जकःप्रका

लज्जः प्रतिमात्रःपरागतिः॥ परवर्गापहारी च परवर्गांतरास्थिरः ॥ ६५ ॥ प्रतिपक्षाविरोधीचप्रतिपत्तिथिवल्लभः ॥ प्रतीपचारीपूज्येशोप्रमेयात्माप्रमाणवित् ॥६६ ॥ प्रतिसाधुः प्रकाशेभ्यः प्रकाशात्माप्रकाशकृत्॥परोपकारीपूतात्मा प्रतिमानप्रमागतिः॥ ६७ ॥प्रत्यक्षःप्रास्थितः प्रेष्ठः प्रतिभाभावगःप्रभुः ॥ परानुग्रहकृत्पादः पादविश्वःपदेस्थितः ॥ ६८ ॥ पदज्ञःप्रपतःप्रांचः

प्राचीनःप्रलयेस्थितः॥ प्रोद्गीथः परिकर्मा
गः प्रस्तुतःपानलंपटः॥ ६९ ॥ प्रकर्षः पर्व
संस्तुत्यः पर्वनाथःसुपर्वकः ॥ प्रमादःप्रव
रः पाकी प्रलोकः प्रबलः फणी ॥७०॥ प्रका
मःप्रह्वसुखदःपरिनीतपणःप्रगः॥ प्रच्छन्नः
प्रजनः प्रस्थः प्रोड्डीनगतिरव्ययः ॥ ७१ ॥
परीतः परमागाढ्यःपरिगीतः प्रमाणकः॥
प्रमाताप्रकरः पातापातालतलवासकः ॥
॥७२॥ पनसः प्रोन्नसःपीनःपर्वहस्तोऽपरो

द्भवः ॥ पयोदाधिशयः पीलुः पीलवःपीतवि
श्वकः ॥ ७३ ॥ पीतांबरः पीतमाल्यःप्रत
नुःपीवरांसकः ॥ पानचक्ररतः प्रेङ्खः
प्रह्लादःप्रबलोन्मदः ॥ ७४ ॥ पत्नीप्रेयान्प्र
कर्षात्मा प्रबीजः पारिगः परम् ॥प्रतियायी
प्रतोलाद्रिः पतिसाधुः प्रगानवित् ॥७५॥प्र
हर्षीपारिनेतात्मा प्रकृष्टात्माप्रलोभकः ॥
मर्त्याकृतिर्महारूपोमहोत्साहो महाबलः
॥७६॥ मंत्रीमंत्रकलाभिज्ञोमनुसूतिर्विधा

यकः ॥ मखीमहार्थीमोक्षात्माचतुर्वर्गफ
लप्रदः॥७७॥स्वपनःसर्वःसर्वज्ञःसर्वात्मा
सर्वतोमुखः ॥ संचारीसहजःस्वामीसोम
पानरतः सुखी ॥ ७८॥ सभ्यःसभापतिः
साधुःसंवीतःसुखकंदकः ॥ सुशांतःश्रम
णःशोभीशुभांगःश्रावणःशुचिः ॥ ७९ ॥
शरीगर्भांगभूरस्थि शकलीशक्रपालकः ॥
तुलसीवल्लभोराधापतीराजीवलोचनः८०
पितृपालोमहीपालोगोपालोगोपवल्लभः ॥

श्वासी शामीशंखग्रीवःशमीकःशांतवत्स
लः ॥ ८१ ॥ शंकराप्रियइंद्रेष्टश्चतुर्मूर्तिर्वि
भावसुः ॥ प्रभावज्ञःप्रसादाढ्यःप्रसन्नः
शुचिमानसः ॥८२॥ रतिलीलाप्रदोभानु
यैंतागगनगः क्षमी ॥ विशालेशोविशाला
क्षोविलासीविमलोदरः ॥ ८३ ॥ सुरूपी
भीमकर्माचघोरोघोरार्थदर्शनः॥ समका
यपरीतात्माकच्छपोमधुनोमधुः ॥ ८४ ॥
विश्वस्फारीजगत्सत्योवृषोवृषगतिर्वृषः॥

स्वर्वसुः सकलः क्षांतआगमार्थविचक्षणः
॥ ८५ ॥ स्त्रीलीलारसिकः कांतो देवकार्या
र्थमूर्तिभृत् ॥ सिद्धिदः सिद्धपूज्यश्चासिद्धी
शः सिद्धिसाधकः ॥ ८६ ॥ भावगम्योभाव
पूज्योभावेशो भावनोर्भकः ॥ भक्तिगम्यो
भक्तपालोभक्तार्तिहृद्भवोद्भवः ॥ ८७ ॥ ना
तिभावश्चातिभवोभवभावार्थदायकः ॥ भ
विकोविकलोभावो भावनावश्यगोभवः॥
॥ ८८ ॥ भवेशो भवनोभव्योभविष्यत्फ

लदायकः ॥ भूतोभविष्यद्भवनंवैकुंठभुवनास्थितः ॥ ८९ ॥ द्वारिकेशोदरीदूर्वाश्यामः कंदप्रभः प्रभुः ॥ मिथुनो मैथुनरसः कर्कटः कर्कटीकटी ॥९०॥ कठोरः कठिनः क्रूरः सिंहः सिंहपराक्रमः ॥ नृपसिंहो मुनिव्याघ्रो मननीदमनोदमः ॥ ९१ ॥ कन्यारतःकनीयांश्च तुलातुल्योऽतुलार्थदः॥ वृश्चिकोविजनोधन्वीमकरःसकलार्थदः॥ ॥ ९२ ॥ कुंभभृत्कुंभकर्णारिर्मीनोमीनावि

लोचनः॥ द्वादशात्माविधुर्भौमोबुधः सू
रिर्भृगुः शनिः॥ ९३ ॥ सदावक्रगतिः के
तुर्ध्वजहस्तो गदाधरः ॥ कैवल्यस्थः खे
टशाली खर्पटःखाटभेदनः ॥ ९४ ॥ प्रभा
करः प्रमेयात्माखाधारःखननः खगः ॥
यंतागणेशो विघ्नेशोयमुकूलगो यमी ॥
॥ ९५ ॥अदित्यादित्यपुत्रघ्नस्तथादित्यस्व
रूपभृत् ॥ इछेश ईशतायुक्त उत्पला
क्षःसदाशुचिः ॥ ९६ ॥ ऊहक्रणगक्रुकरःख

पूर्णःकमलाधरः ॥ ऌवर्णैभ्योऌबीजाढ्य एकऐकारपूजितः ॥ ९७ ॥ बिंदुर्विसर्गःका व्यश्वखनिर्गगनरूपधृत् ॥ घर्घरीडोङ्वर्णा कश्चाटुच्छन्नीजयीझषः ॥ ९८ ॥ ञबीजयुक्त ष्टिकार्थष्ठकुरोडीनवत्सलः ॥ ढकायुक्तो णवर्णाढ्यस्तवर्गःस्थलभोजनः ॥ ९९ ॥ दाताधन्वीनतोनम्रजनाभीष्टफलप्रदः ॥ पंडितः पूर्वगः पूर्वः फणीशशीर्षगोविगः ॥ ॥ १०० ॥ वायुर्वह्नीजराहीनो वलीवालप

राक्रमः ॥ भक्तिप्रियोभगोभर्गोभगवान्भ
गपूजितः॥ १०१॥ मानीमत्तोमदोन्मादी
माद्यत्प्रीतमदोद्यमः ॥ यावोययातिप्रेष्ठ
श्च यज्वायज्ञपतिर्यशः ॥ १०२॥ रंतारमे
शोरमणोराघवोरंजनस्तथा ॥लघुलक्ष्मण
भ्राताचलक्ष्मीनाथोजलाशयः ॥ १०३ ॥
वासुदेवोवसुर्वासोवैश्यनाथोविशांपतिः ॥
शंकरः शशभृन्मौलिसेवितःशापहारकः ॥
॥ १०४॥ षड्गुणातीतइंद्रेशः षट्चक्रप्रियद

र्शनः ॥ समःसोमपथातीतःसर्वेशःसर्वसा
धकः ॥ १०५॥ हरिर्हर्यक्षपूज्यश्चहरिभी
तिविनाशकः ॥ हरिसूनुप्रियोहर्ताहरोनृह
रिरूपभृत् ॥ १०६ ॥ हरियुक्तोहरिस्थश्च
हरिनेत्रोहरिप्रभः ॥ क्षमाशीलःक्षमीक्षांतो
ज्ञवर्णाङ्कविभूषितः ॥ १०७ ॥ लज्जालुर्ली
लसोलेलोलाभदोलोलमानसः ॥ अच्यु
तःकमलाकांतश्चामीकरविराजितः १०८
टंकेशस्तारकेशश्चतारापतिस्तनूनपात् ॥

पद्मिनीशःपद्मनाभः पद्मपत्रविलोचनः ॥
॥ १०९ ॥ यक्षिणीशोयक्षपूज्यो यज्ञेशो
यक्षवाहनः ॥ शारीशारविलोलश्चशारिके
शादिपूजितः ॥ ११० ॥ ब्रह्मज्ञोब्रह्मकृद्ब्र
ह्माब्रह्मस्तुत्यः सुमध्यमः ॥ वाचस्पतिर्म
हाकाव्यकर्ताकामधुगव्ययः ॥ १११ ॥
विश्वयोनिरमेयात्माबुद्धोबुद्धिविवर्धनः ॥
बोधनोबुद्धिकृद्बुद्धाबुद्धिशालिप्रियोबुधः ॥
॥ ११२ ॥ ज्ञानीज्ञानप्रदोमानीमेधावीम

धुसूदनः ॥ मान्यः स्तव्यः स्तवःस्तोत्रं मौनीमुनिजनार्चितः ॥ ११३ ॥ महेशानोमहामेरुः कक्षांतस्थः कचावृतः ॥ कुचमर्दीकचाक्रांतःकामिनीवल्लभः प्रियः ॥ ॥ ११४ ॥ कूजन्मधुव्रतांघ्रिश्चकिंकिणीचरणोघृणी॥ केशवः किंशुकान्वीतः कृष्णः कृतांतवादकः ॥ ११५ ॥ कामिनीवशगः कामी विश्वरूपप्रदर्शकः ॥ गुरुपुत्रप्रदाता च गुरुसेवारतोगुणी ॥११६॥ गुणातीतोगु

णाढ्यश्च संभवोविभवः प्रभुः॥महार्थदोम
हाकायोमहामेधोमहागतिः॥११७॥महा
प्राणोऽणुवर्गेशोमहारण्यनिवासभूः ॥ व्य
वहर्तामहामेरुगामीनागांतकारकः११८॥
विश्वंविश्वंभरोधीरःकविः साख्यविचार
कः॥सांख्यार्थसंज्ञितः संख्यावानद्रिधरई
श्वरः ॥ ११९ ॥ दक्षिणोदक्षिणाचारी दक्षि
णाफलदायकः ॥ वामोवामफलाहारी वा
माचारफलप्रदः ॥ १२० ॥ दुष्टघ्नोनित्य

तृप्तात्मामहेंद्रःकपिशः करः॥ व्रतीव्रतफ
लप्रेप्सुर्व्रतिनांफलदायकः॥ १२१॥ सुघो
षोमंत्रपूतात्मासुनीतिः सुखदायकः॥ नि
राकारोनिराभासोनिर्वासो निर्णयोनरः॥
॥ १२२ ॥ निर्निमेषोनिरुद्योगोनिर्नीतिर्नि
रुपद्रवः॥निराभासोनिरुच्छ्वासोनिर्नामा
निरुपप्लवः॥ १२३ ॥ अनुत्तमोदुराधर्षो गं
भीरोभावगोध्रुवः ॥ सर्वव्यापीमहात्माच
गोपदासोमहोत्तमः ॥ १२४॥ आनंदजो

नंदसूनुर्नंदिर्नांदीप्रियोनदः॥ नादात्माना
दकृन्नादोनदीनाथोनगोचरः॥१२५॥ अनं
गोमित्रकृन्मित्रोमैत्रीभूषोमहोत्सवः॥ मु
दितोविदितोदीक्षोमखप्रीतः सुदीक्षितः॥
॥१२६॥ अनिरुद्धोवासुदेवः प्रद्युम्नश्चंद्र
मामखः॥संकर्षणोजगद्रक्ष्यो दैत्यदानव
सूदनः॥१२७॥ महारथोभीमकर्मावि
श्वकर्मामनोजवः॥ अव्याजोव्याधिजः
स्वामी भोगीमानीगदाग्रजः॥१२८॥

शश्वत्प्रसंन:सर्वात्माविष्वक्सेन: सहयवा
न् ॥ स्वकर्माबहुभुग्वैद्य: सुमालीविश्वत
र्पक: ॥ १२९ ॥ आतपीवीनगोरोपीसत्य
संध:स्ववीरहा॥आश्रमोविश्ववासश्चचक्री
पद्मायनेक्षण: ॥ १३० ॥ दामोदरोद्वारि
केशोदिक्पालोदशमीप्रिय: ॥ द्वादशीशो
र्चितोधामारतीशोराधिकावर: ॥ १३१ ॥
भुजंगमपरित्राताभुजंगोभुजविक्रम: ॥ भू
भृत्सेव्योभूरिकीर्तिर्भूरिकक्षोबहुश्रवा: ॥

॥ १३२ ॥ समीचीनोभवोपांत उरुभोगीर
तिप्रियः॥ नभोगगतिरश्वत्थोभूतावासःस
तांगतिः॥१३३ ॥ भूभृन्नितंबचारींद्रानुजो
जन्मविवर्जितः ॥ कल्याणभूर्महेशानोमा
ननीयः फलप्रदः॥१३४॥१०००इतिनाम्नां
सहस्रंतुपरतत्त्वार्थगर्भितम् ॥ वर्णमाला
मयंदिव्यमीप्सितार्थफलप्रदम् ॥ १३५ ॥
रहस्यंपरमंदेवितवस्नेहात्प्रकाशितम् ॥
साधकानांहितंदेविपुण्यदंसुखवर्धनम् ॥

॥ १३६॥ अश्वत्थसंनिधौदेवितुलसीवनम
ध्यगः ॥ पठेद्यःप्रातरुत्थायसलभेत्सिद्धि
मुत्तमाम्॥१३७॥विद्यार्थीलभतेविद्यांधने
प्सुर्धनमाप्नुयात् ॥ अपुत्रोलभतेपुत्रान्वं
शवृद्धिकरान्शुभान् ॥सर्वान्कमानवाप्नो
तियत्पाठकरणात्प्रिये ॥ १३८ ॥ इदंनाम
सहस्रंतुश्रीराधावल्लभस्यते ॥ गदितंगि
रिजेभक्त्यागोपनीयंप्रयत्नतः ॥ १३९ ॥
इतिश्रीविश्वसारोद्धारतंत्रेश्रीराधाकृष्णस

हस्रनामसमाप्तम् ॥ श्रीराधाकृष्णार्प
णमस्तु ॥ ॥ ॥ ॥
अथस्तोत्रराजः ॥ ॐ अधुनाशृणुवक्ष्या
मिस्तोत्रराजमनुत्तमम् ॥ यंविनानैवमंत्र
स्यसाधनंसफलंभवेत् ॥ १ ॥ विनानेन
नसिद्धिःस्यात्पूजनस्यजपस्यच ॥ सहस्र
नामपाठस्यतस्मात्स्तोत्रंपठेत्सदा ॥ २ ॥
संसारसिन्धुतरणिंप्रथमाक्षरंयोमायांजपे
त्तवमनोःकिलकल्पकाले ॥ मुक्तासितंतव

वपुः सकलंहिध्यायँल्लीनोभवेत्परशिवेस
तुरागमुक्तः ॥३॥ योमानवस्तवमनोः सत
तंद्वितीयंबीजंजपेद्धविशुद्धमतीरमायाः ॥
सोपीहदुर्गतिसमुद्रमतीत्यराज्यंनिष्कंट
कंचलभतेपुरुकीर्तियुक्तः ॥ ४ ॥ यःकाम
राजमपरंतवभक्तियुक्तोबीजंस्मरेन्निशिच
कोकनदच्छविर्नः॥तस्येहकंदर्पमदातुराः
स्त्रियोधावंतिपश्चाद्विगतत्रपाभुवि ॥५॥ कृ
ष्णायेतिपदंमनोस्तवनरःश्रद्धान्वितोयः

सदामेघश्यामप्रभंप्रभुंपठतिचस्मृत्वास
लोकेप्रभुः ॥ प्राग्जन्मार्जितपापकोटि
निचयंमुक्त्वापरंनिष्कलं रूपंविश्वविचि
त्रमद्भुततरंप्राप्नोतिविष्णोःपदम् ॥ ६ ॥
अतसीकुसुमोपमंप्रभातेतवगोविंदपदंन
मंतिनित्यम्॥ भुवितेखलुपंडिताः कवीना
मृषभाःकीर्तियुताभवंत्यवश्यम् ॥७॥श्री
राधाप्रियवल्लभास्तिसततंसर्वार्थसिद्धिप्रदं
बीजंतेखलुनैकवर्णविमलंध्यायेद्यएवंशु

च्चिः ॥ सोमुत्रेहचमानवोनिरुपमंप्राप्नोति
दिव्यंवपुस्त्यक्त्वानेकजनस्यदुःखनिच्चं
यविस्मृत्य भोगान्परान् ॥ ८ ॥ धनंज
याख्यबीजंतेमनोरंतेस्थितंनरः ॥ केवलं
जपतेयोसौससंपत्साधकोभवेत् ॥ ९ ॥ इ
त्येवंस्तोत्रराजेशंमयास्नेहात्प्रकाशितम्
तवभक्त्यापिदवेशिकलौसर्वार्थसिद्धिद
म् ॥ १० ॥ योगिनीसारसर्वस्वंरहस्यंत्रि
दिवौकसाम् ॥ नवाच्यंपरशिष्याय भक्ति

हीनायसुंदारि ॥ ११ ॥ वाच्यंसद्गुरुभक्ता
यसदाचारपरायच्च ॥ सर्वरोगहरंसर्वज्व
रातीसारकापहम् ॥ १२ ॥ सर्वागमरहस्यं
चचतुर्वर्गफलप्रदम् ॥ १३ ॥ अस्यैवपठ
नाद्विघ्नाभूताःप्रेताःपिशाचकाः ॥ नश्यं
तितक्षणात्सर्वैस्तोत्रराजस्यकीर्तनात् ॥
इतिश्रीविश्वसारोद्धारेतंत्रेश्रीकृष्णपंचमां
गस्तोत्रंसमाप्तम् ॥ शिवायास्तु ॥ ॥

# अथ नारायणोपनिषद्॥



ॐ श्रीगणेशायनमः ॐ अथपुरुषोहवैना
रायणो कामयत्प्रजास्सृजेयेति नारायणा
त्प्राणोजायते मनस्सर्वेंद्रियाणिच खंवा
युर्ज्योतिरापश्चपृथ्वीविश्वस्यधारिणी ना
रायणाद्ब्रह्माजायते नारायणाद्रुद्रोजाय
ते नारायणात्प्रजापतिः प्रजायते नाराय
णादिंद्रोजायते नारायणाद्द्वादशादित्याः
नारायणादेकादशरुद्राः नारायणादष्टौव

सर्वः सर्वा देवताः सर्वे ऋषयः सर्वाणि छंदांसि सर्वाणि च भूतानि नारायणादेव समुत्पद्यन्ते नारायणे प्रलीयन्ते ॥ अथ नित्यो देव एको नारायणो ब्रह्मा च नारायणः शिवश्च नारायणः शक्रश्च नारायणः द्वादशादित्याश्च नारायणोऽष्टौ वसवोऽश्विनौ च नारायणः सर्वे ऋषयश्च नारायणः कालश्च नारायणो दिशश्च नारायणोऽधश्च नारायण ऊर्ध्वश्च नारायणो नारायणोन्तर्बहिश्च मूर्तामू

तौँचनारायणो नारायणएवेदंसर्वंयद्भू

तंयच्चभव्यम् ॐअथनित्योनिष्कलंकोनि

राख्यातोनिर्विकल्पोनिरंजनः शुद्धोदेवएए

कोनारायणोनद्वितीयोस्तिकश्चित् यएवं

वेद ॥ रुद्रंससारथिंकृत्वामनःप्रग्रहवान्

पुमान्॥ प्रयातिपरमंपारंविष्णवाख्यंपदम

व्ययं॥एतद्वैनारायणस्योपनिषदं योहवै

नारायणस्योपनिषदमधीते ससर्वेभ्योघो

रेभ्योविमुक्तोभवति ससर्वान्कामानाप्नो

ति ससर्वांश्चलोकानाप्नोति ब्रह्मत्वंचगत्वा
ऽमृतत्वंचगच्छतीति २ ॐ मित्यग्रेव्याह
रेन्नमइतिपश्चान्नारायणायेत्युपरिष्टादोमि
त्येकाक्षरंनमइतिद्वेअक्षरेनारायणायेतिपं
चाक्षराणि एतद्वैनारायणस्याष्टाक्षरपदं
योहवैनारायणस्याष्टाक्षरपदमधीते सो
नुपप्लवः सर्वमायुरेतिविंदते प्राजापत्यं
रायस्पोषं गोपत्यं ततोमृतत्वमश्नुतेइति
ॐ प्रत्यगानन्दंब्रह्मपुरुषं प्रणवस्वरूपम

कारउकारोमकारइतितानेकधासमभवं
स्तदेतदोमिति यमुक्त्वामुच्यतेयोगीज
न्मसंसारबंधनात् ॐनमोनारायणायेति
मंत्रोपासकोवैकुण्ठभुवनंगमिष्यति तदि
दंपरंपुरुषंपुंडरीकाक्षंविज्ञानघनं तस्मात्त
डिदाभासमात्रं ब्रह्मण्योदेवकीपुत्रोब्रह्म
ण्योमधुसूदन इतिसर्वभूतस्थमेकंवैनारा
यणं कारणरूपमकारणंपरंब्रह्म ॐ यएत
दाथर्वशिरोधीतेप्रातरधीयानोरात्रिकृतंपा

पंनाशयति सायमधीयानोदिवसकृतंपा
पंनाशयति मध्यन्दिनमादित्याभिमुखो
धीयानः पंचभ्यः पातकातिपातकमहा
पातकानुपातकोपपातकेभ्यः प्रमुच्यते
सर्ववेदपारायणंलभते नारायणेसायुज्य
माप्नोति नारायणेसायुज्यमाप्नोति इति
श्रीनारायणोपनिषत्समाप्ता ॥

पुस्तक मिलनेका ठिकाना–
खेमराज श्रीकृष्णदास
"श्रीवेंकटेश्वर" छापखाना ( मुंबई. )

